श्रीगणेशाय नमः ॥ जयत्यसौ जगन्नाथजगन्नाथस्य जामाता प्रवेशोऽस्तु प्रवेशोऽस्मिन्न्यायवर्त्मनि स
१ त्वरं १ वाक्यं व्याप्तेः प्रबोधाय मुक्तावल्याः प्रबध्यते श्लोकरूपेण बालानां दत्तपादो प्रणम्य च २ कचि
दर्थाववोधार्थं व्याख्यानमपि लिख्यते गुरवः करुणापात्रपूर्णं यं तु ममेरितं ३ हेतोः साध्यविशि
ष्टस्य भेदवद्वृत्तिशून्यता व्याप्तिर्ज्ञेया यथा सद्धेतौ नेया धूमादिलिंगके ४ पर्वतो वन्हिमान् धूमादित्यादौ
तत्समन्वयः साध्यं वन्हिः पर्वतोऽत्र तद्वान् पक्षः प्रकीर्तितः ५ तद्भिन्नस्तु ह्रदस्तत्र हेतुर्धूमो न तिष्ठति
यदि धूमो भवेत्साध्यं हेतुर्वन्हिः प्रयोज्यते ६ असद्धेतुः स विज्ञेयो व्यभिचारितयोच्यते अत्रापि सा
ध्यवान् वन्हिस्तद्भेदस्तप्तलोहके ७ तत्र वन्हेश्च संबंधान्नास्ति व्याप्तिरिति स्थितिः साध्यस्य पक्षसंबंधो
यस्मात्तेनैव साध्यवान् ८ बोध्यो ऽन्यथा साध्यवान् स्याद्वन्हेरवयवोपि च तद्भिन्नः शिखरी तत्र हेतोर्वा
व्याप्तिरिष्यते ९ साध्यवत्तावच्छिन्नभेदवान् पक्षतद्भिन्नकः तेनैकसाध्यवद्भेदवृत्तित्वेन दूषणं १० शिवे
हेतोः पक्षेण संबंधो यस्मात्तेनैव रञ्जिता ज्ञेया साध्यवदन्यस्मिन्नन्यथा दूषणं स्फुटं ११ साध्यव १

ह्निमयश्चात्र धूमस्यान्वयको भवेत् तत्र धूमस्य वृत्तित्वं समवायेन चेत्स्फुटं १२ साध्यवद्भिन्नवृत्तित्व
सामान्याभावलक्षणे ग्राह्योऽन्यथाऽप्यतिव्याप्तिर्वह्नेश्च व्यभिचारिणी १३ साध्यवद्भिन्नयः कश्चि
त्तु हृदस्तद्वृत्तिशून्यता हृदेनेऽत्रसति व्याप्तिः सामान्याभाववारिता १४ हेतुर्विशिष्टसत्तास्या
द्द्रव्यत्वं साध्यमिष्यते अत्राव्याप्तिर्द्रव्यभिन्ने गुणे शत्तापि तिष्ठति १५ विशिष्टं शुद्धमेक
स्यात् न तयोः पृथगात्मता अवच्छेदकमेवात्र हेतुताया भवेद्द्वयत् १६ तेन रूपेण वृत्तित्वाभा
वोऽत्र विवक्षते साध्यवद्भिन्नवृत्तित्वे अवच्छेदकता न चेत् १७ यस्य हेतोश्च धर्मस्य तत्त्वं व्याप्तिवि
दुर्बुधाः साध्यवत्त्वं भवेद्यत्र जगतत्रान्यको भवेत् १८ अव्याप्तिरप्रसिद्ध्या स्यात् केवलान्वयिसाध्य
के १९ सता साध्यकता तो च दूषणं व्यतिरेकिणी साध्यवद्भिन्नसामान्ये समवायेन वृत्तिता २० अ
प्रसिद्धान्तरस्त्वत लक्षणान्तरमुच्यते असंतीभाव घटितं पूर्वं दूषणवारकं २१ निष्ठा वृत्तिर्हेतु
मति यस्याभावस्य ज्ञायते तस्य तत्प्रतियोगी स्यात् साध्यं तद्भिन्नमुच्यते २२ अयमप्रतियोगीति

पदेनार्थस्फुटीकृतः साध्यसाधनयोर्व्याप्तिः सामानाधिकरण्यतः २३ साध्यसाधनपक्ष नाना
२ वन्ह्यादिसाध्यके तत्राव्याप्तिर्धूमहेतौ तथा वन्हेरभावतः २४ चत्वरीयानलाभावः पर्वते धूम
वत्यपि वन्हित्वप्रतियोगीति क्रमेण सकलोपि च २५ पुत्रैकमधिकर्णं स्यात् साध्यसाधनयोर्द्वयोः
तयोर्व्याप्तिः प्रवक्तव्या नान्ययोर्न च वाच्यता २६ घटसाध्योभयाभावो हेतुमत्यपि पर्वते साध्यंत
त्प्रतियोगीति दूषणं पूर्वबोधितं २७ घटेति शतिमत्रैकस्तत्र दोनस्तधीर्यथा द्रव्यत्वाद्गुणवान्
ज्ञेयः क्रमेणाव्याप्तिरत्र च २८ तानीरीनामभावश्च पृथिव्यां तद्गुणा अपि रूपादयो न तिष्ठते हेतुम
त्यपि चात्मनि २९ दूषणद्वयमुद्दिष्टं प्रतियोगिपदोत्तरं नञ्समयुज्यते पूर्वं परं तद्धर्मवाचकं ३०
भवेत्साध्यपदं चात्र साध्येतद्धर्मवाचकं साध्यार्थेन नयर्थस्य अन्वयोपि प्रबुध्यतां ३१ तथा च हेतु
मन्निष्ठविरहप्रतियोगिता अवच्छेदकभिन्नं च यच्चावच्छेदकं भवेत् ३२ साध्यतायास्तद्विशिष्टं सा शिवे
ध्यं तेन समं भवेत् सामानाधिकरण्यं हि हेतौ व्याप्तिः परिष्कृता ३३ रूपत्वव्याप्यजातिर्हि पृथ्वित्वे २

द्भिन्नयश्चात्र धूमस्यावयवो भवेत् तत्र धूमस्य वृत्तित्वं समवायेन वै स्फुटं १२ साध्यवद्भिन्नवृत्तित्व
सामान्याभावलक्षणे ग्राह्योन्यथाप्यतिव्याप्तिर्वह्नेश्च व्यभिचारिणी १३ साध्यवद्भिन्नयः कश्चि
त् ह्रदस्तद्वृत्तिशून्यता ह्रदेनेद्वृत्तिव्याप्तिः सामान्याभाववारिता १४ हेतुर्विशिष्टसत्तास्या
द् द्रव्यत्वं साध्यमिष्यते अत्राव्याप्तिर्द्रव्यभिन्ने गुणे सत्तापि तिष्ठति १५ विशिष्टं शुद्धमेकं
स्यात् न तयोः पृथगात्मता अवच्छेदकमेवात्र हेतुताया भवेद्यत् १६ तेन रूपेण वृत्तित्वाभा
वोऽत्र विवक्ष्यते साध्यवद्भिन्नवृत्तित्वे अवच्छेदकतान्वेत् १७ यस्य हेतोश्च धर्मस्य तत्त्वं व्याप्तिवि
द्बुधाः साध्यवत्त्वं भवेद्यत्र ज्ञातत्वान्यको भवेत् १८ अव्याप्तिरप्रसिद्ध्या स्यात् केवलान्वयिसाध्य
के १९ सत्ता साध्यकज्ञातोऽत्र दूषणं व्यतिरेकिणी साध्यवद्भिन्नसामान्ये समवायेन वृत्तिता २० अ
प्रसिद्धान्ततश्चात्र लक्षणं तरसुच्यते असंतीभावघटितं पूर्वदूषणवारकं २१ निष्ठा वृत्तिर्हेतु
मति यस्याभावस्य ज्ञायते तस्य तत्प्रतियोगी स्यात् साध्यं तद्भिन्नमुच्यते २२ अयमप्रतियोगीति

ष्टविरहप्रतियोगित्वं ४५ प्रतियोग्यधिकरणत्वं भवेद्विरहविशेषणं तेन कपिसंयोगेसा
२ साध्ये एतद्वृक्षत्वहेतौ नाव्याप्तिः ४६ वृक्षमूले कपिर्नास्तिरितियाधीः प्रजायते तयासंयोगि
संयोगः स्वाभावप्रतियोगिकः ४७ प्रतियोग्यधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वं तदा
तथैवाव्याप्तिर्गुणवृत्त्यभावस्यनरोसत्वात् ४८ प्रतियोग्यधिकरणावृत्तित्वं यदिस्वतदातिव्या
प्तिर्द्रष्टव्या संयोगीसत्वादित्यादौ संयोगाभावस्यद्रव्यवृत्तित्वात् ४९ हेत्वधिकरणेऽत्र प्रतियो
ग्यनधिकरणवृत्तित्वं निष्कर्षः स्वप्रतियोग्यनधिकरणहेत्वधिकरणावृत्त्यभाव इति ५० प्रति
योग्यनधिकरणं च प्रतियोगितावच्छेदकावच्छिन्नस्य अनधिकरणं तेन विशिष्टसत्तावान्
जातेरित्यादौ न दोषः ५१ जात्यधिकरणगुणे विशिष्टसत्ताभावप्रतियोगित्वेपि सत्तायाः प्र
तियोग्यनधिकरणं च साध्यतावच्छेदकसंबंधेन ५२ ज्ञानवान्सत्वादित्यादौ नातिव्याप्ति शिव
दूषणं स्फुटं तेन ण समनाधिकरणघटे विषयतया ज्ञानस्य सत्वेपि ५३ इत्थं च वह्निमान्धूमा २

नैव साध्यते शंक्यते तत्रत्वाव्याप्तिरवच्छेदकभेदत ३४ रूपत्वव्याप्यशब्देन नीलत्वादिकजातयः प्रग
ह्यंते साध्यतावत्ताभिरेवावछिद्यते ३५ अत्रापि हेतुमनिष्ठविरहप्रतियोगिता नीलत्वाद्यैरवछिन्ना
रक्तत्वादिवत्तादृशं ३६ रूपत्वव्याप्यजातित्वरक्तपीतादिमत्त्वस्याश्रयः समवायेन भवेत् साध्या
विशेषणं ३७ तदवछिन्नस्याभावः न हि क्वापि पृथिव्यामस्ति रूपत्वव्याप्यजातिमान् पृथिव्यांन्ना
स्तीति त्वध्यापते ३८ दंड्यादिः साध्यते यत्र दंडत्वस्यैव साध्यता अवछेदकता मद्दसारं पर्यंपागद्य
ते ३९ तद्वत्व सर्वसाध्येपि जातित्यस्य परंपरा अवछेदकताधिक्यनिक्षेपदोषवारणं क्रियते वङ्
भिश्चात्र साध्यसाधनभेदतः ४१ हेत्वधिकरणं चात्र हेतुतावछेदकविशिष्टस्य हेतोरधिकरणं
ग्राह्यमतो विशिष्टसत्तादेन क्षतिः ४२ तेन हेत्वधिकरणगुणे विद्यमानोपि यो द्रव्यत्वाभावः न भ
वत्यत्राव्याप्तिः तत्प्रतियोगित्वेपि द्रव्यत्वस्य ४३ यः संबंधो हेतुतायामवछेदक उच्यते तेनाधि
करणं वाच्यं हेतोस्तेवन्यदूषणं ४४ धूमस्य समवायिन तदवयवोपि जायते अश्रयो वन्हितन्नि

रत्र घटाभावे वन्ह्यभावो भिन्नः इत्युक्त्या वार्यते नेत्थं धूमादिभाववान्वन्ह्यभावादित्यत्राव्याप्तिः
४ ६२ अत्र तु साध्यतावच्छेदकः अभावीयविशेषणतात्मकः संबंधो भवति तेन निखिलाभावानां
स्वाभावात्मकप्रतियोगिसमानाधिकरणत्वं ६३ कपिसंयोगाभाववानात्मत्वादित्यत्र तृतीये
चाव्याप्तिः कपिसंयोगस्वरूपः आत्मवृत्तिकपिसंयोगाभावस्याभावो भवति ६४ गुणसामा
न्याभाववत्त्वे तत्प्रतियोगितावच्छेदकं ज्ञेयं तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मनः सं
भवति ६४ पक्षीकृत्याहा कालं घटादिर्यत्र साध्यते हेतौ न तत्परिमाणे च लक्षणाव्याप्तिस्तथा
ते ६५ प्रतियोगिअधिकरणस्य विरहस्यात्र चाप्रसिद्धत्वात् हेत्वधिकरणस्य कालस्य का
लिकेन सर्वाधिकरणत्वात् ६६ प्रतियोगिअधिकरणा[illegible]कालत्वाप्यत्वावशिष्टघटाभा
वः जगदाधारत्वेपि कालस्य स्वभेदविशिष्टानधिकरणत्वात् ६७ स्वस्मिन्स्वभेदाभावा शिवे
दिति केचिन्न पीयंति सुधेयः वस्तुतस्त्वभावस्य प्रतियोगितायामवच्छेदकः संबंधः ६८ ४

दित्यादौ धूमवत्यपि पर्वते समवायेन वन्हेर्नाभावदूषकः नन्वेनैधिकरणत्वं प्रतियोगितावच्छेद
कावच्छिन्नस्य यस्य कस्यचिद्यावतां यत्किंचिद्धर्मावच्छिन्नस्येति वा ५४ आद्ये एतद्वृक्षत्वे कपिसं
योगसाध्यके चाव्याप्तिः वृक्षावृत्त्यपि संयोगः कपिसंयोगविरहस्य प्रतियोगी ५५ तदनधिकरणं
हेतोरधिकरणं भवति वृक्षस्तस्य द्वितीयेत्वप्रसिद्धिः प्रतियोगिव्यधिकरणाभावस्य ५६ स
र्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टनिजाभावोपि भवति स्वप्रतियोगिनैव सह सामानाधि
करण्यं तस्य ५७ अद्यक्षणविशिष्टस्य घटादेर्विरहस्य यः विरहस्तदभावश्च तद्यमाभावदृष्यते
५८ यद्यपि च घटाभावः भवति द्वित्वाभावात्मकप्रतियोगिना सह समानाधिकरणः न सा
ध्यतावच्छेदकसंबंधेन ५९ वन्हिमान्धूमादित्यादौ कथं तद्व्यधिकरणाभावाप्रसिद्धिः इति त
दा घटाभावे वर्तमानोपि योग्नेर्विरहः ६० स चाधिकरणस्वरूपः तत्प्रतियोगिश्च वन्हिर्भवति
साध्यतावच्छेदकसंयोगः तेन प्रतियोग्यधिकरणभेदाभावाधिकरणं ६१ इति याप्रसिद्धि

लिकसंबंधावच्छिन्नत्वस्य घटत्वावच्छिन्नत्वस्य द्वयोरभावस्य सत्वान्नाव्याप्तिः ७८ ननु च प्रमेयो
५ वह्निधूमादिना च साध्यो भवति यत्र तत्र लक्षणस्याव्याप्तिः प्रमेयवह्नित्वावच्छिन्नस्यासत्वात्
७९ प्रमेयवह्नित्वे हि वह्नित्वापेक्षया गुरुत्वेन तत्प्रतियोगितायामनवच्छेदकमिति चेत् ८० इति
चेन्न तस्यापि कंबुग्रीवादिमान्नास्तीति धीः अनेन हि रक्तं कंबुग्रीवादिमत्वावच्छिन्नायाः
८१ प्रतियोगितायाश्च विषयीकरणान्नियमतोऽत्र गुरुधर्मस्यानवच्छेदकमिति संक्षेपः
८२ हासो दिगंबरपरंबुजसारसे [illegible] कलसत्वलभगवत्कृष्णनामधेये चकेक्रमं कमपि व्याप्ति
निरोधनाय मुक्तावलीमनुसरन्सरितेः यथाब्धिः ८३ इति व्याप्तिव्याख्या ततः पक्षवृत्ति
त्वमित्यत्र पक्षत्वं किं तदाह सिषाधयिषेति साध्यस्य निश्चयः साध्यसिद्धिरित्यभिधीयते शि
षाधयिषया शून्या या तद्विरहः पक्षता १ केवलं च सिषाधयिषा पक्षता न भविष्यति अनु शिवे
मित्सां विना यत्र यत्र घनगर्जनतः कश्चित् २ मेघानुमानं भवति सर्वेषामिह स्मरणता अतएव ५

प्रतियोग्यनधिकरणत्वं तेन संबंधेन हेत्वधिकरणस्य तद्वृत्तीत्यभावीयायास्तुः प्रतियोगितास्तासु ६९
यत्संबंधावच्छिन्नत्वयद्धर्मावच्छिन्नत्वयोरुभयोर्विरहः न हेतुव्यापकत्वं तद्धर्मावच्छिन्नसाध्यस्य ७०
व्यापकसामानाधिकरण्यं भवति हि व्याप्तिरत्र सुलभा हेतोः सामानाधिकरण्यं साध्यतावच्छेदकसं
बंधेन साध्यवती ७१ हेतोश्च वृत्तित्वं ज्ञेयं हेतुतावच्छेदकेन संबंधेन अत्र च यद्यत्पदाभ्यां साध्यतावच्छेदक
संबंधधर्मयोर्ग्रहणं ७२ साध्यसंबंधानिवेशे समवायेन वन्ह्यभावमादाय व्याप्तिश्च समवायेन व
न्हेरनधिकरणं पर्वतस्तद्वृत्तिः ७३ विरहो वन्हेस्तस्य प्रतियोगितायामवच्छेदकं वन्हित्वं तदवच्छि
न्नत्वस्य सत्त्वादव्याप्तिस्फुटीकृताप्यत्र ७४ न धर्मानिवेशेन स्यात् संयोगेन व्यापकत्वमिह संयोगा
वच्छिन्नत्वं संयोगेन घटादेरभावस्य ७५ प्रतियोगितायामस्ति तदर्थमुभयोरभावो वाच्यः
इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगेन ७६ घटाभावप्रतियोगिनो घटस्यानधि
करणेपि महाकाले वर्तमानोपि च यः संयोगेन घटस्याभावस्तस्य ७७ प्रतियोगितायां यत्र का

शिषाधैषाभवंतिच १४ अनुमित्सालक्षणेतत्रसिद्धेर्नाशङ्काजायते प्रतिबंधकशून्यत्वादनुमि
त्सोत्तरक्षणे १५ जन्यतेनुमितिःसम्यक्परामर्शेनतत्क्षणात् आहोयत्रसिषाधैषानतत्रसिद्धिस्त
तःपरं १६ परामर्शःक्रमेणाभूत् शिषाधैषाविनश्यति परामर्शक्षणेचात्रसिद्धिस्यात्प्रतिबं
धिका १७ परामर्शक्षणेप्येवंसिद्धेकालेनतिष्ठति सिषाधैषायोगपद्यंगुणानांहिनिषिध्य
ते १८ योग्यविभुविशेषाणांविशेषणमतःपरं कथंसिद्धेप्रवक्तव्यंविशिष्टत्वंविलक्षणे १९ इ
तिचेन्नयत्रास्तिवन्हिव्याप्यधूमवान्पर्वतोवन्हिमानिति प्रत्यक्षस्मरणंवाततःशिषाधैषा
पक्षतांसंपन्नयेत्तत्र २० विशेषणमवश्यंशिषाधैषाविरहविशिष्टत्वं अत्रवंबोध्यमन्यंत्वया
दृशायादृशाशिषाधैषासत्वेसिद्धिसत्वेपि २१ यल्लिंगकानुमितिःजायतेतादृशाशिषाधैषावि
रहविशिष्टशिद्धेर्विरहः तत्तल्लिंगकानुमितौविशिष्यविशिष्यपक्षताभवति २२ तेनसिद्धि शिवे
परामर्शयोःसत्वेयत्किंचिज्ज्ञानंजायतामितिवानुमित्सायां सत्यामपिनानुमितिःप्रत्यक्षाविष ६

नसाध्यस्यसंदेहोपिचपक्षता ३ विनासाध्यस्यसंदेहंधनशब्देनजायते अनुमानमंबुदानामकालेजल
दामपि ४ सिद्धेसत्यामपितुनस्यानुमितिस्ताभवेद्यदि तत्रचोत्तेजकवशादनुमितिरपिजायते ५ अनुमि
त्साभावनत्वंतेयंसिद्धौविशेषणं यत्रसिद्धिर्नास्तितत्रशिषाधयिषास्तुवानवा ६ विशेष्याभावमात्रेण
पक्षेसिध्येनपक्षता अनुमित्सातुयत्रास्तिसिद्धिस्तिष्ठतुवानवा ७ विशेषणस्यविरहाद्विशिष्टा
भावपक्षता अभावोहिविशिष्टस्यविशेषणविशेष्ययोः ८ अभावादुभयोर्द्वयोः क्वचिदेकस्यदृश्
यता तद्बोधजनकास्तेयाविशिष्टविरहस्थले ९ शिषाधयिषाविरहोविशेषणमिहोच्यते विशेष्यं
तुभवेत्सिद्धिस्तदभावश्चपक्षता १० सिद्धिस्तिष्ठतियत्रैकाशिषाधयिषानविद्यते अनुमित्सावि
रहिणिसासिद्धिःप्रतिबंधिका ११ परामर्शेपितत्सत्वात्तदनुमितेर्जननंनहि प्रतिबंधकाभाव
सत्वेकार्यंनियमेनजायते १२ नतुयत्रपरामर्शःसिद्धिश्चाथशिषाधयिषा शिषाधयिषासत्वेतत्
त्रपरामर्शस्यनाशनात् १३ नप्रजायतेचानुमितिर्विशिष्टविरहेपिच यत्रसिद्धिःपरामर्शः

पा. ल.
७

त्वस्य कराद्सित्त्वप्रकारक ३२ तानंतरं वानुमितित्वाया मसत्यां पुरुषत्वबाधात् इति नानुमितिः किंतु प्र
त्यक्षं पुरुषस्यैव ३३ अतोऽनुमित्साविरहेण युक्ता तुल्यार्थप्रत्यक्षकरापि काचित् विरोधिकासानुमि
तात्वेतनाभ्रमयसामग्रीयपां गनेच्छा ३४ एवं परामर्शमनुद्धरादपि प्रत्यक्षवांछाय हि नैव जायते त
दा न प्रत्यक्षजनिरतोऽभूत्सः प्रत्यक्षवांछाविरहेण युक्ता ३५ अनुमितेरपि सामग्री भिन्नार्थप्रत्यक्षे
प्रतिबंधिका भवति श्रीहरिचरणस्तुतौ काभिनीजिज्ञासे विवदितिसंक्षेपः ३६ दिगंबरपरं दृम
करं तनुणामिह दासवंशोद्भूतानां विपक्षः पक्षतां गतः ३७ ॥ इति पक्षतालक्षणं ॥
प्रमाणं चतुर्धेति वाक्याच्चतुर्णां प्रमात्तानमप्यवसामान्यतो वै ततो यस्य जिज्ञासया चापरोक्षं प्रती
पादयित्वानुमानं जगाद १ श्रीजगदंबार्पणमस्तु ॥ ॥ शके १७२२ आश्विन शुद्ध ८ शुक्रे सं: १८५७

छिद्रे
७

यकत्वादिच्छायाः २३ वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वेपि प्रत्यक्षातिरिक्तं ज्ञा
नं जायतामितीच्छायां सत्यां २४ भवत्येवानुमितिः अनुमितिविषयकत्वादिच्छायाः एवं धूमपरा
मर्शकाले आलोकेन वह्निमनुमिनोमीतीच्छायां २५ न जायते चानुमितिरालोकलिंगकपरा
मर्शाभावात् सिषाधयिषाभावकाले यादृशसिद्धिसत्वेनानुमितिः २६ प्रतिबंधकत्वेनाभिमतादृ
शसिद्धिविशिष्टवत्त्वा यादृशानुमित्यासत्यां सिद्धिसत्वेपि जायते चानुमितिः २७ उत्तेजक
त्वं तस्याः प्रतिबंधविघटकत्वाद्धेयं प्रतिबंधकत्वं नत्वस्याः सिद्धेस्तत्र चोत्तेजकस्यापेक्षा २८ तेन
पर्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्वेपि भवत्येवानुमितिः पक्षतावच्छेदकसामा
नाधिकरण्येन २९ साध्यसिद्धावपि तदा तदवच्छेदेनानुमितेर्दर्शनात् प्रतिबंधकत्वं सिद्धेः
पक्षतावच्छेदकावच्छेदेन ज्ञायमानायाः ३० सामानाधिकरण्येन पक्षधर्मस्यैवेतनः ज्ञायमा
नायानुमितेः सिद्धिमात्रं विरोधकं ३१ यत्रायं पुरुषोऽवेति संशयानंतरं त्वरा य व्याप्यं पुरुष ल